# सुन्दरकाण्ड प्रार्थना श्लोकाः

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

वन्दे वानर-नारसिंह-खगराट्-क्रोडाश्ववक्त्राञ्चितं
नानालङ्करणं त्रिपञ्चनयनं, देदीप्यमानं रुचाम् ।
हस्ताभैरसिखेटपुस्तकसुधाभाण्डं कुशाद्रीन् हलं
खट्वाङ्गं फणिवृक्षधृद्दशभुजं सर्वारिगर्वापहम् ॥

सर्वारिष्टनिवारकं शुभकरं पिङ्गाक्षमक्षापहं
सीतान्वेषणतत्परं कपिवरं कोटीन्दुसूर्यप्रभम् ।
लङ्काद्वीपभयङ्करं सकलदं सुग्रीवसम्मानितं
देवेन्द्रादि समक्तदेवविनुतं काकुत्स्थदूतं भजे ॥

बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता ।
अजाड्यं वाक्पटुत्वं च हनुमच्छरणाद्भवेत् ॥

नमोऽस्तुरामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोस्तु चन्द्रार्कमरुद्गणेभ्यः ॥

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥

दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनुमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥

न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥

अर्दयित्वा पुरीं लङ्कां अभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥

धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम् ॥

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यः ददाम्येतद्व्रतं मम ॥

।। इति सुन्दरकाण्ड प्रार्थना श्लोकाः समाप्ता ।।